# विषयसूचिका


| | | |
|---|---|---|
| भारतवीरसंबोधनम् | .... | १ |
| सम्पादकीयम् | .... | २ |
| ज्योतिस्संश्लेषविद्यापीठः | .... | ३ |
| महालक्ष्मीव्रतोत्सवः | .... | ४ |
| व्यासवाल्मीकिसंवादः | .... | ५ |
| राजाजीकथा १७ | .... | ९ |
| संस्कृतमेव भारतैक्यसाधकम् | .... | ११ |
| पद्यरत्नानि | ... | १३ |
| स्वभावो दुरतिक्रमः | .... | १४ |
| सुलभपाठमाला – १७ | .... | १५ |
| मनोरञ्जनम् | .... | १६ |
| दानं धनाय कल्पते | .... | १७ |
| अन्यायराजप्रहसनम् | ... | १९ |
| रमणीयार्थप्रतिपादकशब्दः काव्यम् | .... | २१ |
| सुभाषितानि | .... | २५ |
| हिमवति दिव्यौषधयः शीर्षे सर्पः समाविष्टः | ... | २७ |
| संस्कृतं राष्ट्रभाषा, अन्याः प्रान्तीयाः | .... | २९ |
| समीक्षा | ... | ३० |
| दया | | ३२ |

# भारतवीरसंबोधनम्

चलत चलत वीराः प्र-
  हरत रिपून् शूराः !
धरत धरत चायुधानि उप-
  सरत सरत रिपून् ॥ ॥ चलत ॥

विचिनुतारिमण्डलम्
  विदलयत तन्मुण्डानि,
विरचयत देशं निष्कण्टकम्
  परिचरत देशं भारतम् ॥ ॥ चलत ॥

काश्मीरं अवश्यं रक्षत
  निश्शेषान् अरीन् प्रकुरुत,
दास्यं अवनेः निराकुरुत
  नैराश्यमुज्झत प्रवीराः ॥ ॥ चलत ॥

पाकान् दुर्विपाकान् विधत्त
  स्तोकान् तत्परिकरान् अवधत्त,
घूकोष्विव सूर्यालोकान् शत्रु-
  लोकेषु सन्धत्त फिरंगान् ॥ ॥ चलत ॥

अहो बत भारतं प्रति खेदकर्यः वार्ता एव श्रूयन्ते। सप्ताहं नावसितं यत्कच्छ भुवि परस्पराभिमुखतया व्याढाः भारतपाकस्थानसेनाः सन्धिग्रन्थि-परवशाः निरुपद्रवा स्वं स्वं स्थानं न्यवर्तन्तेति। काश्मीरसीमोल्लंघनस्य पाकस्थानकृतस्य वार्ता अश्रूयत। मनस्यन्यत् वचस्यन्यत् कर्मण्यन्यत् दुरात्मनां भवतीति वाक्यं सार्थकयति स्म पाकः पातकी। कच्छे सन्धिः, तद्दार्ढ्योपादनाय भारते मन्त्रिणां समावेशकार्यक्रमः, एतदन्तरे एव काश्मीरे स्वसैनिकानां सायुधानां दुष्टः प्रवेश इति कियती तस्य नैतिकवर्तनच्युतिरिति विचारयन्तु सहृदयाः।

सैनिकानां प्रत्यक्षप्रवेशः पौराणां अक्रमप्रवेशः प्रच्छन्नवेषाणां चराणां अनुप्रवेशः इत्येवं बहुभिः प्रकारैः आकुलमकरोत् पाकः काश्मीरं, भारतं च दिग्भ्रान्तम्।

सीमावर्तिनः ऐक्यराज्यसमितेः प्रतिनिधयः पाकस्य इदं अक्रमकार्यं स्वकार्यदर्शिने सूचितवन्तः एव। कार्यदर्शी इममक्रमं प्रकाशयितुं उद्युक्तोपि अन्तिमक्षणे पाकबिभीषिकया तूष्णीमास्त। भारतनिवेदितात्याचाराः अपि आंग्लामेरिकादयः वृष्टिहता महिषा इव गजनिमीलिकया अवर्तन्त। शत्रुश्च महता सन्नाहेन साहसेन च अन्तःप्रविश्य जानपदान् पीडयति स्म।

एवं स्थिते क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परंतप" इति भगवद्वचनं भारत-मचेतयत्। आत्मरक्षणाय अन्यमुखप्रेक्षणं अनुचितमिति भारतसर्वकारः अज्ञानात्। अतः पाकप्रतिघटनाय सः पुरः असरत्। काश्मीरजनतैव स्वभूमिप्रविष्टान् शत्रून् भारतसैन्याय न्यदर्शयत। यथाशक्ति च सा तेषां घातुकानां निरोधे वधे च साहाय्यमकरोत्।

एतदवसरे भारतप्रदर्शिता राजनीतिचतुरता धीरता चाभिनन्दनीये। बहुवारं सीमोल्लंघनकर्तुः पाकस्य दोषनिरूपणेऽपि बधिरायमाणानां पाश्चात्यानां

अनुमोदनमनपेक्ष्यैव भारतसेना पाकदर्शितपथा पाकाक्रान्तप्रदेशं प्रविश्य बहून् शत्रून् प्रपलाय्य तेषामायुधानि अवशयत। अपि च तानि अम्मेरिकादत्तान्येवेति न्यरूपयच्च। युद्धोपयोगीनि दुर्गस्थलानि कानिचन आक्रम्य पाकसेनागमनं प्रतीक्षते स्म। एवंकरणेन भारतदौर्बल्यं विभावयतः पाकस्य विस्मयः, तदनुकूलराज्यानां च वाक्स्तम्भः समजनि। मित्रताच्छन्नानां भारतबलह्रासकानां च गर्दभचर्मावृत-शार्दूलानां स्वबुद्धिवैभवे विश्वासः शिथिलितः। ते च इदानीं अगत्या भारतं सान्त्वयितुं सीमारेखातः परावर्तयितुं च यतन्ते।

भारतदेशे भवितव्यस्य मन्त्रिसमावेशस्य स्थगितत्वात् पाकः निरुत्सुको ऽभवत्। कच्छसन्धिपर्याप्तं भारतसर्वकारस्य वचनं अंगीक्रियेतैव मन्त्रिसमावेशं विनापीति अस्मदीयं ऋजुत्वं अनिरुद्धमेव प्रवर्तते। अतः काश्मीरसीमोल्लंघनं आत्मरक्षणाय केवलं न तु परभूमेराक्रमणार्थम्।

यद्यपि जलान्तर्गामिनः प्रदानाय विलम्बमानः आंग्लदेशः भारतमन्त्रि-समाह्वानपुनर्निरोधी अम्मेरिकादेशश्च पश्चात्तापमनुभवितुं समयोयं समायातः।

इतःपरं दुस्तन्त्रैः दुरुपद्रवैः च अयं भारतदेशः न केनापि अभिभूयेत।

श्रीकृष्ण एव अर्जुनस्येव अस्मन्महामन्त्रिणः कर्तव्यप्रोत्साहनं कुर्वन् अवतु भारतम्!

# श्री ज्योतिस्संश्लेषविद्यापीठः

अयं पीठः 1950 तमे वत्सरे तिरुपतिसमीपे नडवलूरग्रामे स्थापितः निर्निरोधं स्वकार्यक्रमं निर्वहति।

अस्य विद्यापीठस्य प्रतिष्ठापकाः स्वाचार्यचरणं गताः टि. वि. वरदाचार्य-शिरोमणि महोदयाः। वर्तमानकार्यवर्गसदस्याश्च इमे —

(१) गौरवाध्यक्षः — श्री सद्गुरु कुञ्जमूरु गोपालाचार्यस्वामिनः।
(२) कार्याध्यक्षः — श्री आ. वरदराजन्, शिरोमणिः।

(३) उपाध्यक्षः – श्री शङ्करलाल्, B. A.,

(४) कार्यदर्शी – श्री वि. शेषाचार्यः ।

(५) संयुक्तकार्यदर्शी – श्री पि. नागिरेड्डिः ।

अन्ये च सदस्याः दश सन्ति । अयं च विद्यापीठः सांस्कृतिककार्यक्रम-निर्वहणार्थं समेषां जनानां संस्कृते प्रवेशं कल्पयितुं च चित्तूरुसंस्कृतभाषा-प्रचारिण्या सभया सुसंबद्धः ।

हैंदवार्षसंस्कृतिसंरक्षणाय अयं पीठः काले काले उत्सवान् परिकल्प्य, विद्वद्भिः उपन्यासान् प्रदाप्य, योग्येभ्यः बिरुदपारितोषिकादिकं च प्रदाय, महान्तं निर्माणकार्यक्रमं निर्वहति ।

## श्रीमहालक्ष्मीव्रतोत्सवः

6—8—65 दिने भृगुवासरे तिरुपतिनगरसमीपवर्तिनि नड़वलूरुनामके ग्रामे श्रीज्योतिस्संश्लेषविद्यापीठस्य आध्यक्ष्येण श्रीजगन्मङ्गलसौभाग्यदेवतामहा-लक्ष्मीव्रतोत्सवः महता कार्यक्रमेण सम्पन्नः ।

कार्यक्रमे प्राभातिकस्तोत्रपाठः श्रीमहालक्ष्म्याः ग्रामोत्सवः सहस्रनामार्चनं, होमः, पूर्णाहुतिः, गोपूजा, नादस्वरगानसभा, उपन्यासाः (भगवद्विषयानधिकृत्य) हरिकथाकालक्षेपः, भजनगोष्ठी, इत्यादिकं प्रमुखमासीत ।

अस्मिन् वत्सरे प्रवृत्तेऽस्मिन् व्रतोत्सवे स्तोत्रपाठप्रवचनस्पर्धा आयोजिता । तत्र कुशलेभ्यो माणवकेभ्यः ".संस्कृतान्ध्रमुकुन्दमाला" "द्राविडान्ध्रतिरुप्पावुः" "स्तोत्रमञ्जरी" इति पुस्तकानि सं. भा. प्र. सभाया पुरस्कृतानि ।

अस्य पीठस्य आध्यक्ष्येण संगीतविद्या विदुषां बिरुदप्रदानमप्याचरितम् । हरिकथाकालक्षेपेण भक्तजनमनांसि आवर्जयते श्री श्रीनिवासरेड्डी (विद्वान्) महाशयाय "हरिकथा कविपण्डितः" इति, वायुलीनवाद्यविद्यानैपुण्यप्रदर्शकाय श्री मुनिरत्नं महाशयाय "वायुलीनवाद्यविद्याविलीनः" इति, तबलावाद्यविद्या-प्रदर्शनेन जनानामुत्साहं उन्मस्तकं कृतवते श्री राजगोपालन् महाशयाय "तबला-बलप्रबलः" इति च बिरुदानि सपारितोषकाणि पीठाध्यक्षेण प्रदत्तानि ॥

# व्यासवाल्मीकिसंवादः

★

महाविद्वान्
श्री कांची प्र० भ० अण्णङ्गराचार्यस्वामी

( पूर्वमुद्रणे अशुद्धिबाहुल्यात् तदेव पुनः प्रकाश्यते, कृपया क्षम्यताम् )

( आह्निकं निर्वर्त्य प्रतिनिवृत्तौ महर्षी पुनस्संभाषितुमुपचक्रमाते )

**व्यासः** – गुहसकाशे "न च वर्ते प्रतिग्रहे" इति यदुक्तं रामचन्द्रेण, तत्र विचारणीयमस्ति इति खलु मया प्रोक्तं प्रभाते, तत्रायं विचारः प्रवर्त्यते। गुहेन सहितो रामो यदाऽऽसीत् तदा स गुहो भोज्यवस्तु किमपि समुपाहृत्य कृपया स्वीकर्तव्यमित्यभ्यर्थयामास। अथ रामेण प्रत्युक्तमेवम् – (अयोध्या-५०) "यत्त्वहं भवता किञ्चित् प्रीत्या समुपकल्पितम्। सर्वं तदनुजानामि न हि (च) वर्ते प्रतिग्रहे ॥ अश्वानां खादनेनाहमर्थी नान्येन केनचित्। एतावतात्र भवता भविष्यामि सुपूजितः ॥" इति। अयोध्यानगरात् येन रथेन प्रस्थितो रामः, स रथो नैव प्रतिनिवृत्तोऽद्यापीत्यवगम्यते; यतो हि "अश्वानां खादनेनाहमर्थी" इत्युवाच राघवः। अश्वानामशनमन्यत्, मनुष्याणामशनमन्यत्। न तावद् घास-कुलुत्थादिकमुपजहार गुहः। अपि तु मधुपर्कमेव। तस्य तुरगेभ्यस्समर्पणमादिशति राघवः। "शबर्यां आचार्योपसेवनरूपधर्मविशेषनिष्ठा आसीत्; अत एव तद्दत्त-मप्रतिषेधेन स्वीकृतवान्; गुहस्य तादृशधर्मनिष्ठाविरहादेव एतत्प्रदत्तं न स्वीकृतवान्" इति परमार्थः प्रोक्तचरस्तत्रभवता; तत्र न मे किमपि चोद्यमस्ति; सुसमाहित एव अस्मि। "न च वर्ते प्रतिग्रहे" इतीदं कथनं किमावश्यकम्? किं वा युक्तरूपम्? इत्येव मे विचिकित्सा वर्तते। न केवलं मम; अपितु बहूनाम्। तृप्तिकरमुत्तर-मिहाभिधेयं श्रीमता।

**वाल्मीकिः** – भगवन्! "न च वर्ते प्रतिग्रहे" इतीदं वचनं न मदीयम्' अपि तु श्रीरामचन्द्रमुखारविन्दविनिर्गतं मयाऽनूदितं केवलम्। अत्र तावदेवं शङ्कितुं योग्यम् – "ऋजुबुद्धितया सर्वमाख्यातुमुपचक्रमे" इत्याद्युक्तरीत्या प्रकृत्या

ऋजुबुद्धितां वहन् रामचन्द्रः कथमेवमनार्जवमाविष्कुर्वन् बभाषे ? प्रतिग्रहाभावस्य सर्वत्र नियतत्वे सति युज्येत काममेवं कथनम् । शबरीसविधे नैतद्वचनमवोचत; प्रतिजग्राह च तया प्रदत्तमप्रतिषेधेन । ततश्च प्रतिग्रहविरहनैयत्यं नास्तीति सुष्ठु संसिद्धम् । एवं च प्रतिग्रहविरहनियमस्य क्वचिदाविष्करणम् अन्यत्र तादृशनियम-परिपालनश्रद्धां विहाय प्रतिग्रहणं च कौटिल्यकृत्यमेव खलु । शुभगुणनिधौ भगवति रामचन्द्रे अवद्यमिदं कथं घटेत ? इति । भगवन् बादरायण ! अत्र मम मनसि प्रतिभातं विज्ञापये । गुहसकाशे "न च वर्ते प्रतिग्रहे" इति यदुक्तम् तत् सर्वथा प्रतिग्रहाकरणनियमप्रतिपादनपरमिति नास्थेयम् । तथाविधार्थबोधननिर्बन्धो नास्ति खल्वेतस्मिन् वाक्ये । ""गुह ! त्वत्सकाशे प्रतिग्रहे न मे रुचिरस्ति" इत्येतदेवात्र विवक्षितं ग्रहीतुं योग्यम् । गुहसकाशात् भोज्यवस्तु प्रतिग्रहीतुं कुतो रुच्यभाव इति प्रश्नस्योत्थितिरप्रसक्ता; समाहितचरत्वात् ।

व्यासः – प्रसीदामि भृशम् । दशरथचक्रवर्तिविषये काचन महती विचिकित्सा वर्तते । तस्यैतस्य सत्यवादिता या प्रथिता, सा सत्यं "पुण्यैर्यशो लभ्यत" इति रीत्यैवेति वक्तव्यं भवति । तदीया कथा तावदिह मनागिव विमृश्यते । दण्डकारण्ये वैजयन्तनामकपत्तनवास्तव्यं तिमिध्वजापरनामधेयं विजितवासवं शम्बरासुरं वासवाभ्यर्थनया जेतुं कैकेय्या सह रथे प्रस्थितः पंक्तिरथ-श्चक्रवर्ती तेनासुरेण सह प्रबलं तुमुलमायोधनं प्रवर्तयन् तेनासुरेण भृशमाकुली-कृतो मूर्छितश्चाभूत । तदात्वे तमिमम् अनपायगन्धमन्यतो नीत्वा संरक्षितवती कैकेयी स्वकीयसारथ्यवैशारद्येन । अथ व्यपेतमूर्छो दशरथः कैकेय्या उपकाराति-शयविज्ञानेन प्रसन्नचेताः तस्यै वरद्वयप्रार्थनं प्रतिजज्ञे । [तया द्विः कृतं रणभुवि रक्षणमिति हेतुना वरद्वयप्रदानप्रतिज्ञानमिति ज्ञायते] सा च परस्तात्समयविशेषे यथाभिलषितं लभै वरद्वयमित्यभिधाय तदात्वे न लेभे । अथ यदा स राजा रामं यौवराज्येऽभिषेक्तुमयतत तदा सा मन्थरादुरुपदेशकलुषितहृदया स्वलब्धव्य-प्रतिश्रुत-चरवरद्वयफलत्वेन स्वात्मजस्य भरतस्य राज्येऽभिषेचनं कौसल्यानन्दनस्य वने विवासनं चाकामयत । अथ यत्समभूत् तदखिलजगदवगतम् । कैकेय्यै वरप्रदान-प्रतिज्ञाचरितं पुरातनं यदुपलभ्यते तद्रीत्या चक्रवर्तिनः सत्यसन्धत्वप्रथा समुचिता भवितुमर्हति वेति विमर्शनीयम् । कैकेय्यै राज्ञा कृतं वरप्रदानप्रतिज्ञानं कस्मिन् युगे ? इति न ज्ञातुं प्रभूयते । वरप्रकारनिर्धारणं तदात्वे नैव कृतमिति तु निस्संदेहम् । तदास्तां नाम । स एष चक्रवर्ती रामचन्द्रं स्वयमाहूय श्वस्तव मकुट-

भिषेको भवितेति यदुदैरिरत्तदिदमखिलभुवनविदितम् । तथा नाम कथितं च न सकृत्, अपि तु द्विः । एवंविधोक्तिवैतथ्यसंपादकेन तेन कामिनीविवशेन कथमिव भूयेत सत्यवादिना ? इति मम महती विचिकित्सा ?

**वाल्मीकिः** – भगवन् ! दशरथोपालम्भे मामप्युत्सुकं मन्यस्व । दशरथस्सत्यसन्ध इति श्रीरामचन्द्रादयस्स्वस्वसौजन्यभूम्ना प्रशशंसुरिति मन्तव्यम् । विमर्शे सति तु स उपालम्भार्ह एवेति ममापि हृदयम् । कैकेय्यै बहुतिथात्कालात्पूर्वं कृतं वरदानप्रतिज्ञानं व्यभिचारसहं भवितुमलम् । कथमिति चेत्, "पञ्चानृतान्याहुरपातकानी"ति शास्त्रेषु समयविशेषेषु प्रयुक्तमनृतम् अपातकं गण्यते । "विवाहकाले रतिसंप्रयोगे प्राणात्यये सर्वधनापहारे । विप्रस्य चार्थेऽप्यनृतं वदन्ती"ति श्लोके प्राणात्ययकाले हि दशरथेन वरदानं प्रतिश्रुतम् । तथाविधप्रतिश्रवपरिपालनमवर्जनीयमिति न कोऽपि निर्बन्धः । रामस्य राज्याभिषेचनं यथा हि चक्रवर्तिना कण्ठरवेण द्विः प्रत्यश्रावि, न तथा कैकेय्यै कोऽपि कृत्यविशेषः प्रतिश्रुतः । विशिष्य कृतां प्रतिज्ञां सामान्यतः कृता प्रतिज्ञा न व्याहन्तुं क्षमा । "अयि कैकेयि ! बहोः कालात्पूर्वं तुभ्यं वरद्वयप्रदानं मया प्रतिश्रुतमिति सत्यम् ; वरप्रकारनिर्णयस्तु त्वया मया वा नैव कृतोऽद्यावधि; रामाभिषेचनं तावत् कण्ठतो मया प्रतिज्ञातमभूत, सर्वथाप्येतदविरोधेनैव त्वया वरयाच्ञा कर्तव्या; एतद्विरोधेनाद्य त्वया क्रियमाणं वरप्रार्थनं नैव न्याय्यम्; नैतदहं निर्वर्तयेयम्" इति यदि दशरथोऽकथयिष्यत्तर्हि तस्य सत्यवादित्वं नैव व्यपैष्यत् ।" अस्थाने ह्ययमनृतभयमुषितहृदयोऽभूत इति ममाप्यभिसन्धिः ।

**व्यासः** – विषयेऽस्मिन् इदमेकमवधेयं भवति । चित्रकूटे समागतं भरतं प्रति पुरावृत्तं कथयन् रामचन्द्रः "पुरा भ्रातः ! पिता नस्स मातरं ते समुद्वहन् । मातामहे समाश्रौषीद्राज्यशुल्कमनुत्तमम् ॥" इति कथितवानस्ति । कैकेयी तदेतत्पुरस्कृत्य "मम पुत्र एव राज्याभिषेकमर्हति; रामाभिषेचनप्रयत्नो न तेऽनुरूपः" इति कथयितुं शक्तैव खलु; पन्थानमिममुत्सृज्य शम्बरसङ्गरसमुदीरितवरदानप्रतिज्ञां पुरस्कृत्य सा निर्बबन्ध ? इति मध्ये काचन विचिकित्सा तुदति मम हृदयम् । तत्रभवानत्र किं प्रतिपद्यते ?

**वाल्मीकिः** – सत्यं तत् । "कैकेय्यां जनिष्यमाणं पुत्रमेवाहं राज्याभिषिक्तं करवाणि" इति श्वशुरसकाशे दशरथेन प्रतिश्रुतमिति ग्रहीतुं न तावत्प्रमाणमस्ति । राज्यशुल्कमनुत्तमं समाश्रौषीदित्येतावदेवोदाहृतं रामचन्द्रेण । राज्ञां न

तावदेकमेव राज्यमस्ति। दशरथस्य अयोध्या प्रधानराजधानी; उपराज्यानि सन्त्यन्यानि बहूनि। तेष्वन्यतमस्य कस्यापि एकस्य राज्यस्य प्रदानेन कैकेयी-विवाहकालिकप्रतिश्रवपरिपालनं सुकरं स्याद्दशरथस्य। तदिदं विदित्वैव कैकेयी स्वयं तत्प्रस्तावं नाकरोदिति प्रतिपत्तव्यम्। किञ्च, विवाहकालिकतद्वाक्योदाहरणे कृते भरताभिषेचनमात्रं कथञ्चित्सिध्येत्। रामस्य विवासनं तु नैव सिध्येत्। भरते राज्यं शासति सति रामोऽपि यदि साकेतमेवाधिवसेत्तर्हि रामगुणानुरक्तास्सर्वा अपि प्रजा भरतमुत्सृज्य रामचन्द्रमेवानुधावेयुः इति दृढं वेद कैकेयी। भरताभिषेचनतोऽपि रामविवासनमेवात्यन्तं प्रधानमिति कैकेयी मेने; अत एव प्रतिश्रुत-वरद्वयदानप्रस्तावमेषा विदधे। तथा च कैकेयीविषये न किमपि वक्तव्यं प्रतिभाति मम। दशरथमधिकृत्य यदत्रभवता प्रस्तावि, तत्कामं युक्तरूप-मभिमन्ये।

**व्यासः** – साधु साधु भगवन् साधु। भवदीयं रामायणं पुनःपुनरह-मावर्तयन् वर्ते। अत एव मे मनसि बह्व्यः शङ्कास्समुन्मिषन्ति। इदमाकर्ण्यताम्; रावणं प्रति मारीचेन कृता उपदेशास्सत्यं मधुरतराः परमार्थघनाः। "रामो विग्रहवान् धर्म" इति यदाविर्भूतं तद्वाचि, तदनर्घं वचः। धर्म एव स्वयं राममयीं मूर्तिमधत्तेति मारीचस्सत्यमेव प्रतिपेदे। गीतायां चतुर्थेऽध्याये "धर्मसंस्थापनार्थाय संभवामी"ति प्रोचुषा भगवता कृष्णेन उपरिष्टादष्टादशेऽध्याये "सर्वधर्मान्परित्यज्य मामेकं शरणं व्रजे" ति सर्वधर्मपरित्यजनमादिष्टं यत्तदिदं विप्रतीपम्। धर्मसंस्थापनार्थमवतीर्णो भगवान् धर्मपरित्यागमादेष्टुं नार्हति खलु। तर्हि कथमेवं विप्रतीपमादिशतीति शङ्कां परिहरद्भिर्महामतिभिरभियुक्तैरेवमनुगृह्यते "स्वस्य साक्षाद्धर्मत्वं विशदीकृतं भवती" ति। भगवान् हि सिद्धधर्मपदेनाभिलप्यते। गीताचतुर्थाध्याये संस्थापनीयत्वेनाभिमतो धर्मः सिद्धधर्म एव। अष्टादशेऽध्याये परित्याज्यतया प्रोक्ता धर्माः सिद्धधर्मव्यतिरिक्तता धर्माभासपदाभिलप्या ये, त एवेति प्रोक्तं भवति। परमार्थस्यास्य प्रतिष्ठापको मारीच एवेत्यत्र न संशयः, यदसावेव प्रोचे "रामो विग्रहवान् धर्मः" इति। ईदृशी प्रतिपत्तिर्दशरथस्य नैव खल्वभूत। सिद्धधर्मव्यपदेशभाजा भगवता रामचन्द्रेण सह वासरुचिमवधीर्य धर्माभासभूतसत्यवचनश्रद्धा या धृता दशरथेन तदिदं महदेवावद्यं चक्रवर्तिनः। राज्ञाऽनेन सत्यमवलम्बितं वेति विचारो दूरादास्ताम्; सत्यसन्ध एव दशरथ इति स्वीकारेऽपि सिद्धधर्मावधीरणेन धर्माभासश्रद्धावलम्बं तत्कृतं न शोभनम् इत्येव मम मनीषा। [क्रमशः]

# राजाजीकथा १७

## आयुधपूजा

( आ. वरदराजः )

पांड्यदेशे कश्चिद्राजा प्रतिवसति स्म। दशाहर्महोत्सवः - देवी नवरात्र-पूजामहोत्सवः समायातः। आयुधपूजासमारोहः महता संरम्भेण प्रवर्तयितुं उद्दिष्टः राज्ञा तदानीम्। धनूंषि, बाणाः, खड्गाः, शूलानि, हलाः, कुद्दालाः, टङ्काः, व्रश्चनाः, लवित्राणि, क्रकचाः, चक्रयन्त्राणि, प्रग्रहाः इत्यादयो नाना आयुध-विशेषाः सन्ति किल – यस्य यस्य या वृत्तिः, तां तां अनुसृत्य सर्वेऽपि तान् स्वीयानायुधविशेषान् आनीय पूजास्थले न्यक्षिपन्।

राजा महापूजां निर्वर्तयितुं प्रवृत्तः। पूजार्थं ब्राह्मणाः स्वीयतालपत्रग्रन्था-नानीतवन्तः; चर्मकारा अपि स्वीयानायुधविशेषान् आरादीन् आनीय न्यक्षिपंस्तत्र।

★ ★ ★

राजगृहे कस्मिंश्चित्कोणे काचित्सम्मार्जनी अतीव चिन्ताक्रान्ता भित्ति-माश्रित्य स्थिता।

किं? कुतः? कथमेवं अनिर्वचनीयं तिष्ठसि? नवरात्रपूजार्थं नगरे सर्वत्र मार्जनकर्मणा अतीव श्रान्तेव दृश्यसे? किमेतत्? – इत्यप्राक्षीद्राजकुमारी? साऽतीव साध्वी न्यायप्रिया च।

"नैवं मातर्नैवं। कार्याचरणे न मे श्रमः क्लमो वा, नाप्यायासः प्रयासो वा। पूजार्थं सर्वे सर्वाण्यायुधानि सर्वान् परिकरान् अत्र स्थापयामासुः। मां तु सर्वात्मना व्यस्मार्षुः। न कश्चित्प्राणी मां स्मरति। इदमेव मे महद्दुःखं जनयति" इति दीनं प्राह सम्मार्जनी।

अहो ! बत ! महान् व्यतिक्रमः धर्मपरिपालने ! नूनमत्रन्यायस्संपादनीयः, प्रवर्तये तावदिति राजकुमारी तां सम्मार्जनीं दधमाना सती अविलम्बमवक्रेणैव पथा पूजास्थलं गता ।

सम्मार्जनी शूर्पश्च कुतो न स्थाप्येतेऽत्र पूजार्थम् । तावप्यानीयेतां इदानीमेव - इति सेवकानादिदेश राजपुत्री । ते राज्ञः समीपं गत्वा एतदर्थं पप्रच्छुः ।

ननु वृत्तिविषये न्यूनाधिकभावो नास्तीति हि शास्त्रमर्यादा । आचार्यवर्या-नुपसद्य प्रष्टव्यमेतत् । सत्वरं विधीयतां आचार्यपादानां सन्निधिः— इत्याज्ञापयामास राजा ।

★ ★ ★

गुरुचरणाः समागताः । तेऽपि प्रथमं किञ्चिदिव तटपटाञ्चक्रुः, इतोऽप्याहु-रतोऽप्याहुः ।

ग्रन्थ आलोड्यतां नाम सावकाशं - इत्याह राजा । आचार्या अपि पृष्ठान्यनेकानि इतस्ततः पुरःपश्चाच्च परिवर्तयन्तः परिशीलयामासुः ।

अन्ते राजकुमार्योक्तं सत्यमित्येव प्रकटितम् । प्रजोपयोगिनी वृत्तिः या काचिद्भवतु, तदुपयोगी आयुधविशेषः यः कश्चिद्वा भवतु, पूजार्ह एव, नाऽत्र संशयः - इत्याहुः ।

शूर्पस्य सम्मार्जन्याश्च पूजा विधेया – इत्यादेशः प्राप्तः । राजाज्ञां पुरस्कृत्य मन्त्री तदर्थोऽधिकारी च गत्वा तावप्यानीय आयुधपूजायै स्थापयामासतुः ।

देवी प्रसन्ना, तदारभ्य चिरकालं पांड्यदेशे न कुत्राऽपि कोणे रजो धूलिरवकरादिकं किमपि न दृश्यते; सर्वत्र शौचस्य महत् स्थानं लब्धम् ॥

# संस्कृतमेव भारतैक्यसाधकम्

श्रीकल्लूरि चन्द्रमौलिमहोदयः गुण्टूरनगरे संस्कृतविधानसभासमावेशे अध्यक्षपीठमलंकुर्वन् स्वभाषणेन संस्कृतभाषायाः राजकीय व्यवहारार्हतां न्यरूपयत्। अयं तस्य भाषणस्य संग्रहः।

अस्मद्भारतदेशस्य सल्लक्षणयुता का वा भाषा भवितुमर्हतीति चिन्तनीयम्। दूरदृष्टिविहीनाः केचित् सा हिन्दी इति, किंकरताभावितान्तःकरणाः केचित् आंग्ली इति च विवादैः देशं संक्षोभयन्ति। एवं विवादैः पुनः दास्यताप्राप्ति-प्रमादः वर्तते। इतःपूर्वं भाषाविषये विजृम्भिताः कल्लोलाः बहिश्शान्ताः अन्तः स्फुरन्त्येव। केचित् प्रान्तीयभाषाणां एव जातीयभाषात्वं प्रकाशयन्ति। वस्तुतः हिन्दी वा अन्या प्रान्तीयभाषा वा जातीयभाषापदं आरोढुं नैव शक्नोति। आंग्लस्य विदेशीयत्वात् तद्दूरापास्तमेव। अस्मद्देशभाषाणां समस्तानां सूत्रप्राया परिपूर्णतापादिका च संस्कृतभाषैव तत्स्थानशोभिनी भवति।

अस्माकं विद्याप्रणाली अद्ययावत् अयोग्यैव वर्तते। प्राथमिकदशामारभ्य कलाशालादशापर्यन्तं च आंग्लमेव नियतं अभ्यस्यामः। एतेन अस्मद्बालबालिकानां परभाषा परभूषा परचेष्टा परमनीषा च दृढलग्ना अभारतीयंमन्यान् तान् करोति। अस्मज्जातेः अनुगुणस्य विद्याविधानस्य अद्यावधि अनिरूपणमस्मद्दौर्भाग्यमेव। प्रान्तीयभाषाणां अविरोधेन तत्पोषणे अनुकूला भाषा जातीया विधेया। तादृशी च संस्कृतभाषैव अस्माभिरादर्तव्या।

आंग्लस्य अधिकारभाषात्वापादनं च प्रमादकरम्। अधिकारभाषात्वमेव निषिद्ध्यते। स्विट्जलैंडदेशे भाषात्रयं जातीयभाषापदमध्यारोहदिति वचनं आपातरमणीयम्। स च देशः अस्मन्मण्डलमात्रवैशाल्यवान्। अल्पीयसि तस्मिन् देशे जनास्सर्वेऽपि भाषात्रयं जानन्ति अस्मत्प्रदेशसीमवासिन इव जनाः। अस्मद्देशे तन्निदर्शनं न घटते। विशालेऽस्मिन् प्रतिप्रदेशं भिन्नभिन्नभाषाभाषिणः न जानन्ति अन्यभाषाः। अत्र एकं विषयं अहं सूचयामि, अवहिताः शृणुत। ऐर्लैंडदेशे यद्यपि

आंग्लभाषाया एव अधिकारभाषात्वेन सर्वव्यापकता, तथापि तस्य देशस्य स्वातंन्त्र्यप्राप्तिसमनन्तरमेव तद्देशीयाः आंग्लं निराकृत्य स्वमातृभाषां गैलिक् भाषामेव अधिकारभाषां अन्वमन्यन्त । आंग्लान्तर्भूतानामेव एवं स्थितौ अनांग्लानां अस्माकं आंग्लव्यामोहोयं कुतो वा समायात इति न ज्ञायते ।

अपि च महम्मदीयजैत्रयात्राभग्नाः यूदाः स्वीयदेशं हित्वा दिक्षु प्रपलायिताः । ते एव कतिषुचन शताब्देषु यातेषु स्वमातृदेशं एन्रीयल् देशं अजयन् । तेन भिन्नदेशेषु विशकलिताः यूदाः स्वदेशं पुनः प्रतिन्यवर्तन्त । एते भिन्नभाषाभाषिणः एव, जर्मनभाषिणश्च अधिकतया वर्तन्ते । तथापि जर्मन्भाषाभिमानमप्रदर्शयन्तस्ते स्वमातृभाषां हीब्रूभाषां अधिकारभाषापदमारोपितवन्तः । एष विषयः तेषां दूरदृष्टिं विशालहृदयं च प्रकटयति । स्वीयसंस्कृतेः संरक्षणाय एतादृश एव निर्णयः साधीयान् । मृतभाषेति प्राचीनभाषेति च हिब्रूभाषां ते न अनिन्दन्, परन्तु तस्याः पूज्यतां अंगीकृत्य तामभ्यनन्दन् ।

तस्मात् अस्मद्देशीया अपि एतान् एतादृशांश्च अन्यान् विषयान् समालोच्य भारतदेशसहजां संस्कृतभाषां अधिकारपीठमारोपयितुं सूचयामि ।

एषा अतिप्राचीना, उत्तमोत्तमा, विशिष्टगुणयुता, मधुरतमा, सर्वप्रान्तीयभाषाणां मातृभूता, खण्डखण्डान्तरेषु कीर्तिता, ऋषिपुंगवैः आदृता, मताचार्यैः पुरस्कृता, टागूरगांधिप्रभृतिभिस्समादृता च ।

नवीनतानिलयेषु पाश्चात्यदेशेषु अपि सकलविश्वविद्यालयेषु संस्कृतस्य असाधारणं स्थानं निर्णीतमिति न विस्मर्तव्यम् । एवं परेषामेव संस्कृतविषये समादरे जाग्रति भारतीयानां तदनादरः लज्जाकरः । भारते भिन्नमतानां भिन्नजातीयानां च वर्तमानत्वेपि सर्वेपि संस्कृतं मानयन्त्येव । अरबिक्, पुस्तु, उर्दू भाषाः संस्कृतमेव पुष्णाति । एतद्विदः विशालहृदयाः महम्मदीयसोदरा एतत् अवश्यं अनुमन्यन्ते । ग्रीकलाटिनभाषयोः संस्कृतमेव मातृकेति अंग्यकुर्वन् । आरभाः संस्कृतादेव भौतिकाध्यात्मिकांशान् संगृह्य पाश्चात्येभ्यः ज्ञानभिक्षामदुरिति विदितचरमेव । हैन्दवाः गङ्गायमुनयोः पवित्रभावनया स्नान्तीति हेतोः महम्मदीयाः क्रैस्तवाः बौद्धा वा ते नदी स्नानपानाभ्यां न मानयन्ति किम् ?

नैषा ब्राह्मणमात्रभाषा। कदाचित् एषा देशभाषात्वेन सर्वजनैः व्यवहृतैव। महर्षयः के नाम? ते जन्मना ब्राह्मणा न भवन्ति खलु। उपनिषत्कर्तारश्च के? ते अपि जन्मना ब्राह्मणा नैव।

एषा च सारभूता वाक् श्रूयताम् — संस्कृतमेव अधिकारभाषाभवेदिति चिन्तयन्तः प्रमुखाः निरालस्यं राज्यसभायां तदनुकूलं शासनमुपस्थापयेयुः। संस्कृतपण्डितान् संकलय्य संस्कृतबोधने सुलभमार्गः अन्वेषणीयः। संस्कृतानुकूलानामेव अभ्यर्थिनां स्वसम्मतीः प्रदाय तान् विजयिनः कुर्युः प्रजाः। संस्कृतभाषा आदृता भवतु! भारतीयसंस्कृतिश्च पुनरुज्जीविता भवतु!!

# पद्यरत्नानि

लेखकः — वैद्यः, रामस्वरूपशास्त्री.
बालसंस्कृतसम्पादकः. मुम्बापुरी.

न श्रमेण विना विद्या सुधियापीह लभ्यते।
दोलनेन विना रम्यो व्यजनस्यानिलो यथा॥

महत्त्वमुपकारेण जायते न बृहत्तया।
खर्जूराणां प्रजातानां जगत्यां तुङ्गता वृथा॥

दुर्जनः क्षुभ्यते शीघ्रं क्षमन्ते सुजनाः सदा।
भृगोः लत्ताप्रहारं हि क्षमते स्म जनार्दनः॥

दयनीयः सर्वजन्तुः दया धर्मस्य लक्षणम्।
ईश्वरस्य च सा नील्यां कुञ्जरेऽपि च वर्तते॥

दुर्गतेष्वपि प्रीयन्ते महान्तः साधवो जनाः।
प्रीतिः रामस्य सुग्रीवे केशवस्य सुदामिनि॥

# स्वभावो दुरतिक्रमः

अस्ति विंध्यारण्ये कश्चन सुतपा नाम मुनिः । सः सर्वदा आत्मारामः जपतपोभिः व्रतोपवासादिभिः महान्तं प्रभावमधिगम्य देशे सुप्रसिद्ध आसीत् । बहवो जनाः तद्दर्शनेच्छया तदाश्रममागत्य तद्दयावशात् शमितनिजकष्टाः सिद्ध-निजाभीष्टाश्च निवर्तन्ते स्म । भूतदयापरवशः स सकलप्राणिषु अनुकम्पते स्म ।

एवंस्थिते कदाचित् तदाश्रमे कश्चिन्मूषिकः उटजात् बहिरागत्य नीवार-धान्यकणान् तत्र तत्र पतितान् खादति स्म । सुतपाश्च तस्य मूषिकस्य चेष्टां सानन्दमालोकयन् आस्त । अत्रांतरे कश्चन बिडालः तत्रागच्छत् । तं दृष्ट्वा मूषिकः भीतः बुभुक्षां अशमयित्वैव प्रधाव्य कुत्रापि निलीनः । एतत् दृष्टवतः ऋषेः मनसि मूषिकविषये महती अनुकम्पा समुत्पन्ना । स स्वसंकल्पात् तं मूषिकं बिडालत्वेन पर्यणमयत् । स बिडालो भूत्वा बिडालेन साकं निर्भयं विचरति स्म । अथ कदाचित् कश्चित् शुनकः तं बिडालमन्वधावत् । बिडालरूपी मूषिकश्च तस्मात् भीतः मुनिसमीपं प्रद्रुतः । तस्मिन् दयमानो मुनिः तं बिडालं शुनकत्वेन पर्यणमयत् । सः शुनकैस्साकं निर्भयं विहरति स्म । अथ कदाचित् तस्मिन् शुनके विचरति आश्रमोपान्ते तं हन्तुं कश्चन व्याघ्रः अन्वधावत् । स च भीतिग्रस्तः आश्रमं प्रविश्य मुन्युटजे निलीनः अभवत् । तत् दृष्ट्वा मुनिः तं व्याघ्रमेव अकरोत् । अथ स निर्भयः स्वेच्छया वने विचरन् अवर्तत ।

सुतपोदर्शनार्थमागच्छन्तः जनाः एतं व्याघ्रं दृष्ट्वा मुनेः माहात्म्यं एतस्य पूर्वस्थितिं बहुधा वर्णयन्ति स्म । एतदाकर्णयतः कृत्रिमव्याघ्रस्य तस्य महती लज्जा प्रभ्यभवत् । किमिदम्? मम व्याघ्रतां अपवदन्तः एते अपमानमापादयन्ति मे । अयं च मुनिः यावज्जीवति तावत् वचनीयमिदं न नश्येत् । अतः मुनिरयं मारयितव्यः येन मम पूर्वजातिकथा विस्मर्येत । इति मत्वा स व्याघ्रः यदा तं ऋषिं हन्तुमुद्युक्तः तावदेव सः त्रिकालवेदी तस्य संकल्पं आकलय्य "यथापूर्वं भव" इति अवदत् । तद्वचनसमनन्तरमेव स व्याघ्रः मूषिकः संवृत्तः बिडालेन प्रधावितः कुत्रापि कोणे अलीयत ॥

॥ अतः नीचानां उपकारेपि ते स्वनीचतां प्रदर्शयन्त्येव ॥

# सुलभपाठमाला १७

## क्रियाः — वर्तमानकालः

बालः पाठं पठति । बालाः पाठं पठन्ति । बालौ पठतः ।
रामः गुरुं नमति । जनाः राजानं नमन्ति । कृष्णार्जुनौ नमतः ।
सूर्यः आकाशे भ्रमति । नक्षत्राणि भ्रमन्ति । नेत्रे भ्रमतः ।
भृत्यः घटं वहति । भृत्याः भारं वहन्ति । द्वौ वृषभौ शकटं वहतः
त्वं पठसि । यूयं पठथ । युवां पठथः ।
त्वं नमसि । यूयं नमथ । युवां नमथः ।
त्वं भ्रमसि । यूयं भ्रमथ । युवां भ्रमथः ।
त्वं वहसि । यूयं वहथ । युवां वहथः ।
अहं पठामि । वयं पठामः । आवां पठावः ।
अहं भ्रमामि । वयं भ्रमामः । आवां भ्रमावः ।
अहं वहामि । वयं वहामः । आवां वहावः ।
अहं त्वां पश्यामि । त्वं मां पश्यसि । बालाः आवां पश्यन्ति ।
वयं चित्रं पश्यामः । यूयं चित्रं पश्यथ । बालाः चित्रं पश्यन्ति ।
आवां चित्रं पश्यावः । युवां चित्रं पश्यथः । बालौ द्वौ चित्रं पश्यतः ।
अहं नमामि । वयं नमामः । आवां नमावः ।

( पुस्तकहस्तं अडिटमु सूरकविं दृष्ट्वा )

नायकः – आर्य ! सूरकवे ! अद्य कदा वा वर्ज्यम् ?

अ. सू. कविः – अहं तु कविः । पञ्चाङ्गपरिचयो नाऽस्ति ।

ना – महाग्रन्थं हस्ते धृतवानसि । किमिदं इयन्मात्रं वक्तुं न शक्नोषि

( इति विहस्य गतः । परेद्युः )

अ. सू. कविः – ( खड्गहस्तं सरभसं गच्छन्तं नायकं दृष्ट्वा ) किं भोः ! मम मुखं श्मश्रुलमासीत् । कृपया क्षुरकर्मणा मदीयं मुखं भद्रं कृत्वा गच्छतु भवान् ।

नायकः – ( सक्रोधम् ) किमहं नापितः, क्षौरं कर्तुम् ?

अ. सू. क – ( सोत्प्रासं ) भवतः करे करवालः किल महान् दृश्यते ! किं तेन, योऽनुपयुक्तः क्षौरमपि कर्तुम् ?

( इति विहसति )

★ ★ ★

एकः – किं भोः ! एवं ससंभ्रमं रासभवत् धावित्वाऽऽगतोऽसि ? कुतः ?

अपरः – कुक्कुरात् भीतोऽहं इत आगतोऽस्मि; बृन्दे सम्मिलितस्य न मे किञ्चिद्भयं इतःपरम् ।

★ ★ ★

पुरोहितः – तदेव अरुन्धतीनक्षत्रम्, किं दृश्यते ?

वरः – नक्षत्रं न दृश्यते, किन्तु विवाहार्थं कृतं ऋणपत्रं परं पुनतो दृश्यते ।

— आ० वरदराजः

# दानं धनाय कल्पते

"साहित्यभूषणम्" पडाल ब्रह्मारेड्डिः,
कोंकुदुरु, पूर्वगोदावरी.

एकदा काम्बोजान् विहारी नामधेयः कश्चिद् भिक्षुकः आगच्छत्। स तत्र नगरेषु ग्रामेषु च क्रमशः भिक्षार्थमटन्नासीत्। यद्यपि काम्बोजा धनधान्य-सम्पन्नाः, तथापि धनोत्पन्नाहङ्काराणां तेषां धनिकानां हृदयेभ्यो भिक्षुकान् प्रति दया दूरीभूता। भिक्षुकाः सर्वत्र अटन्तोपि किञ्चिदेव लभन्ते स्म येन तेषां क्षुदेकवारमपि न शाम्यति स्म। विहारी काम्बोजेषु सर्वत्र अटित्वा धनिकाना-महङ्कारं दानराहित्यञ्च अजानात्। स भिक्षुकाणां दुरवस्थां दृष्ट्वाऽतीव व्याकुलः सञ्जातः। एकस्मिन् दिने स कस्यचिद् धनिकस्य गृहं गत्वा किञ्चिद्दातुं याचितवान्। तदा कस्माच्चित् गृहकलहात् क्रुद्धो धनिको विहारीं दुर्भाषणै-रपमानितवान्। अथ तयोरित्थं मिथः संभाषणं संवृत्तम् —

धनिकः – "गच्छ गच्छ रे! कति वारान् कथयेयम् गच्छेति।"

विहारी – "मा कुप्यतु। कृपया क्षुधिताय मह्यं यत्किञ्चिद्दत्वा पुण्यवान् भवतु भवान्।"

धनिकः – "त्वादृग्भ्यः पापिभ्यो दाने समाचरिते पुण्यं प्राप्स्यति किम्? किञ्चिद्दातुं किमत्र तव पितृपितामहानां सम्पत्तिरस्ति? प्रलापं अकृत्वा झटिति गच्छ गच्छ रे मूढ।"

विहारी – "भिक्षुकास्तु प्रायः चतुरा एव। अत एव ते भगवन्नामस्मरणं कुर्वन्तः वर्तन्ते। धनिकास्तु सर्वाणि सुखान्यनुभवन्तः सर्वेषां जन्मदातारं सम्पद्दातारञ्च भगवन्तं विस्मृत्य तिष्ठन्ति। किञ्चास्मादृशानां भिक्षुकाणां कारणादेव भवादृशा धनिका भवन्ति।

धनिकः – "रे दरिद्र! नेत्रे निमील्य यदि व्यर्थं प्रलपसि तर्हि उपानहा ताडयिष्यामि।"

एकमुक्त्वा यदा धनिकः तं भिक्षुकमाहर्तुं पुरोऽसरत, तदा विहारी तत्क्षणं नयनयोरगोचरो भूत्वा पलायितः ।

अथाऽतीव व्याकुलो विहारी काम्बोजेषु सर्वत्र विभ्रम्य भिक्षुकानेकत्रीकर्तुं प्रारभत । विहारेरविरतपरिश्रमफलात् भिक्षुकाणांमेकः सङ्घः संवृत्तः । भिक्षुकसङ्घमुद्दिश्य विहारी इत्थमवदत् – "काम्बोजेषु भिक्षुकाणामस्माकं किञ्चिदपि आदरः नास्ति । भिक्षामदत्वैव भिक्षुकान् प्रति अश्रव्याणि दुर्भाषणानि श्रावयन्ति । यत्र भिक्षुकाणामस्माकं समुचितः आदरो न स्यात् तत्र विस्मृत्यापि न गन्तव्यमस्माभिः । अतःपरमस्माभिः प्रदेशान्तरं गन्तव्यं यत्रास्माकं सादरं भिक्षा लभ्येत ।

शतसंवत्सरेषु व्यतीतेष्वपि काम्बोजेषु कोऽपि भिक्षुको न प्राविशत । इदानीन्तु काम्बोजेषु नैकोऽपि धनिको विद्यते । येषां पूर्वजा लक्षाधिपतयः आसन्, ते इदानीमकिञ्चना अभवन् । स्वकीयराज्ये सर्वत्र निर्धनान् अन्यराज्येषु च तद्विपरीतान् अवलोक्य काम्बोजनरपतिराकुलोऽभवत । राज्ये सर्वत्र निर्धनानां जनानां विद्यमानतायाः कारणं किं वेति ज्ञातुमैच्छत् । स ज्योतिर्विदः पुरोहितांश्चाहूय अपृच्छत् मदीयराज्ये धनिकानामभावस्य कारणं किं वा सूचयन्तु भवन्तः इति । ते एकग्रीवं व्यज्ञापयन्– "शतवर्षेभ्यः पूर्वमस्मद्राज्ये ऐश्वर्यशालिनां सम्पन्नानाञ्च बाहुल्यमासीदिति ज्ञायते । यदाप्रभृति अस्मद्देशे याचकानामभावोऽभवत्, तदारभ्य धनिकानामभावोप्यभवत् । भिक्षुकेभ्यो यत्किञ्चिद्दीयते; तस्मात पुण्यादेव खलु पुनर्जन्मनि मानवा धनिका सम्भवेयुः । अस्मद्राज्ये तु दानधर्मादिकं ग्रहीतुमेकोऽपि भिक्षुको नागच्छति । अतः अन्यराज्येभ्यो भिक्षुकाः सादरमस्मद्राज्ये आनेतव्याः । तेभ्यो भिक्षुभ्यश्च प्रभूततया सर्वदा यत्किञ्चिद्दातव्यं प्रजाभिः । यदेत्थं क्रियते, तदैव धनिकाः सम्भवेयुरित्यस्माकं सर्वेषामभिप्रायः ।"

तेषां शास्त्रज्ञानामभिप्रायः सत्यमिति मत्वा काम्बोजभूपालः परराज्येभ्यो भिक्षुकान् याचकांश्च ससम्मानमाहूय तेषां निवासायापि प्रबन्धमकरोत् । अस्मान् दयितुमेव भिक्षुका आगता इति मन्वाना जनाः यथाशक्ति सादरं यत्किञ्चिदवश्यं तेभ्यो दातुमारभन्त ।

वर्षशते व्यतीते काम्बोजेषु पुनः धनिका समभवन् । तदा शास्त्रज्ञा अवदन् यद् ये जन्मन्यस्मिन् यावन्मात्रं दानधर्मादिकं समाचरन्ति ते पुनर्जन्मनि तावन्मात्रमेव धनिका भवेयुः । काम्बोजेषु शास्त्रोक्तं फलमिदं प्रत्यक्षतः सत्यमभवदिति ।

# अन्यायराजप्रहसनम्

## महाकविः श्री व० रामानुजाचार्यः

[ पूर्वानुबन्धः ]

दुष्ट – (कव्यादीन् वीक्ष्य) भोः भोः सर्वेषां भवतां अवलोकनेन विनष्ट-सन्नीतिशास्त्रज्ञानदेहारोग्यपुण्यपापाः एव सर्वेऽपि भवेयुः ।

अन्या – (मुण्डकविं वीक्ष्य) भो कवे? के के ग्रन्थाः भवद्भिर-चिताः? कुत्र भवतो विद्याग्रहणम्?

मुण्ड – महाराजः शृणोतु । औवैयाराख्यनिर्दन्तास्यजरत्या रचितानां द्राविडगाथाग्रन्थानां प्रतिद्वन्द्विग्रन्थाः मया रचिताः । तेष्वादौ तद्भाषयैव गेयं इदं आत्तिच्चुवडीत्यस्य कोत्तुच्चुवडीति – "अरञ्शेय्य इरुंबु" "अरवदुजनं" "इयल्वदु कुरैवे" "ईवदु उलक्कै "ऊक्कमे केडुक्कुम्" ।

अन्या – आश्चर्यकरमिदम् ।

मुण्ड – द्वितीयः - "कोन्रैवेन्द" नित्यस्य "किन्रैवेन्द" निति । शृणोतु –

माता पिता शनिर्देवसेवकः केवलो जडः ।
भाषान्तरे श्रमः कार्यः स्वाश्रितान् शकलीकुरु ॥

अन्या – ततोऽप्याश्चर्यमिदम् ।

मुण्ड – लोकनीत्याः "कलहनीति" रिति ।

माता दण्ड्या हिंसनीयाऽपि भार्या पेयं मद्यं सर्वदाऽसत्यमेव ।
वाच्यं सर्वत्रापि भोज्यं च चौर्यं कार्यो दासी संगमश्चापि सर्वैः ॥

अन्या – ततोप्याश्चर्यतमं इदम् । अवकाशलाभे सर्वाणि श्रुणोमि ।

मुण्ड – आदौ स्कन्दानुग्रहात् कुंभजातोऽ
गस्त्योऽद्राक्षीत् द्राविडीं दिव्यभाषाम् ।
तस्माद्गाल्भ्यः सन्ततौ तस्य चाहं
जग्राहान्ये नैव मद्वत्कवीन्द्राः ॥

सर्वेऽप्यस्मिन् कलौ काले नीतिज्ञानविशारदाः ।
जना भवन्ति मद्ग्रन्थवाक्यलेशैकदर्शनात् ॥

वैकुण्ठवैद्यः – श्रृणोत्वस्मत्प्रभावम् । अगस्त्यभोगधन्वन्तरिप्रमुखसिद्धौषधानां अस्मदीयानां च वीर्यपरिशीलने ते परमाणुप्रायाः । अस्मदीयाः महामेरव एव । यद्यस्मिन् संशयः मरणदर्शकपुस्तकोऽवलोकनीयः । तस्मादेव भरतपुरमहाराजोऽपि मम "शतवधपण्डितः" "निर्मूलवैद्यः" इति च बिरुदाख्ये दत्तवान् ।

अन्या – अगस्त्यभोगधन्वन्तरिप्रमुखा एव महासिद्धाः विदिताः । तेषामपि किं उत्कृष्टं भवतो वैद्यपाण्डित्यम् ?

वैकु – मानिन एते सिद्धाः कलियुगेऽहमागमिष्यामीति ज्ञात्वा स्वौषधजातानि अवकरशकटे समारोप्य मयूरपुरस्थोन्नतसंकरपुंजस्थलं संप्रेष्य ऊर्ध्वदेशं गताः ।

अन्या – तथा यदि तेषां औषधेभ्योऽप्युत्कृष्टानि कानि औषधानि भवद्भिर्दृष्टानि ?

वैकु – श्रृणोतु महाराजः । बीरस्य शूरः, लिंगस्य रामलिंगम्, पाषाणस्य रामेश्वरनवपाषाणः, पूर्णचन्द्रोदयस्य तृतीयाचन्द्रोदयः, जलबन्धस्य मलबन्धः, एतद्विधानि बहून्यौषधानि ।

अन्या – सन्तु उदरबाधायाः किं औषधं दीयते ?

वैकु – श्रृणोतु —

घटे निधाय चित्रमूलमूलभारमब्युते
कषायपक्ववतोऽर्कमूलसंयुतं विभावसौ ।
विधाय तं नरो हि पातिचेत्प्रशान्तजाठर-
व्यथस्सुदीर्घनिद्रितो भवेन्मुदा स सत्वरम् ॥

अन्या – भिषग्धुरीण, एतत्कषाये अन्तःप्रविष्ट एव नरो बहिर्नेतव्यः । एतादृशाः औषधयः अस्मद्वैद्यालयेऽपि न सन्ति । अस्तु तत् उष्णबाधितदेहस्य औषधम् ब्रूहि –

[क्रमशः]

# रमणीयार्थप्रतिपादकः शब्दः काव्यम्

रचयिता — मान्त्रिराजु शिवरामराजः, तिरुपति.

काव्यस्य साहित्ये उत्कृष्टतमं स्थानमिति विदितचरमेव सर्वेषामपि विदुषां जनानां च। तदिव धर्ममतिसूक्ष्मया पद्धत्यान्यत् न किमपि बोधयति। हितकरे साहित्ये अत एव अस्य तादृशं स्थानम्। एतत्तु युक्तमेव यत्तस्य स्वरूपं ज्ञातव्यं सम्यगिति। तत्स्वरूपज्ञानात् प्राक् दिङ्मात्रं तन्माहात्म्यं ज्ञात्वा, पश्चात्तत्स्वरूपं तर्कयामः।

कवृ वर्णने इति धातुः कश्चिदस्ति। तस्मात् कविरिति शब्दः उत्पन्नः ततश्च कवयते वर्णयति इति कविः। कवनीयं वर्णनीयं काव्यं भवति। कविकर्म काव्यमित्यनर्थान्तरम्। तस्मादेव कविकृतं सर्वमपि कर्म काव्यं न भवति।

यतः —

"काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये।
सद्यः परनिर्वृतये कान्तासंमिततयोपदेशयुजे॥"

इत्युक्तत्वात् यत् कर्म कवेर्यशोऽर्थकरं भवति, यत् समेषामपि जनानां व्यवहार-ज्ञानाय धर्मबोधनाय चोपकरोति, यन्मङ्गलप्रसादकं भवति, यस्य श्रवणादेव सद्यः परमानन्दो भवति, येन भार्ययेव धर्म उपदिश्यते, तादृशं अलौकिकं लोकोपकारकं कविकृतं यत्कर्म तदेव काव्यं नेतरत्। किञ्च —

"धर्मार्थकाममोक्षाणां वैचक्षण्यं कलासु च।
करोति प्रीतिं कीर्तिञ्च साधुकाव्यनिषेवणम्॥"

इत्यपि चोक्तम्। अपरञ्च —

"एकः शब्दः सम्यक् ज्ञातः सुष्टु प्रयुक्तः स्वर्गे लोके कामधुक् भवति" इति, "गौर्गौः कामदुघा सम्यक् प्रयुक्ता स्मर्यते बुधैः। दुष्प्रयुक्ता पुनर्गोत्वं

प्रयोक्तुः सैव शंसति" इति च शब्दमाहात्म्यं वर्णितं किल। तादृशां शब्दानां प्रतिपादिकं ("व्यवहारविदे इत्युक्तत्वात्) काव्यम्। अपि च –

"चतुर्वर्गफलप्राप्तिः सुखादल्पधियामपि।
काव्यादेव.......................॥" इति चोक्तम्।

कु शब्दे इत्यपि कश्चिद्धातुरस्ति। तस्मादुत्पन्नः चेदयं कविशब्दः तदा अस्य अयं अर्थः। कौति शब्दायते, अर्थात् विमृशति रसभावान् इति कविः। तस्य कर्म काव्यम्।

अस्तु, एवं काव्यमाहात्म्यं प्रयोजनं च बहुभिः बहुधा बहुल सुनिरूपितम्। अलमेतावता। इदानीं काव्यस्य स्वरूपविषये प्रविशामः। "काव्यं नाम किं? इति जिज्ञासायाम् –

प्रतापरुद्रीये विद्यानाथेन "शब्दार्थौ मूर्तिराख्यातौ" इत्युक्तम्। मम्मटेनापि तददोषौ शब्दार्थौ" इति प्रतिपादितम्। एतयोः वचनैर्ज्ञायते यत् शब्दार्थौ एव काव्यमिति। दण्डी तु काव्यादर्शे "शरीरं तावदिष्टार्थव्यवच्छिन्ना पदावली" त्यवोचत्। अर्थात् पदावली या इष्टार्थव्यवच्छिन्ना सैव काव्यम्। रसगङ्गाधरे च "रमणीयार्थप्रतिपादकः शब्दः काव्यम्" इत्युक्तम्। अर्थात् रमणीयार्थद्योतकः शब्द एव काव्यम्।

एवं स्थिते उत्पन्ना बहवः संशयाः यथा (१) शब्दार्थौ काव्यं वा? (२) केवलं शब्द एव काव्यं वा? (३) अथवा अर्थ एव काव्यं वा? (४) सर्वेषां शब्दार्थयोः प्रथमतः कीदृशः सम्बन्धः? एवं प्रादुर्भूतेषु संशयेषु बहुषु काव्य-स्वरूपज्ञानाय तर्कयामः किञ्चित्।

"औत्पत्तिकस्तु शब्दार्थयोः सम्बन्धः" इति जैमिनिः। तदेव प्रतिपादितं सोदाहरणं महाकविना कालिदासेन –

"वागर्थाविव संपृक्तौ वागर्थप्रतिपत्तये।
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ॥" इति।

तस्मात् शब्दार्थौ पार्वतीपरमेश्वरौ इव अनादिसिद्धसंबन्धौ । तयोः सम्बन्धः अविनाभावः । अतः विद्यानाथमम्मटवचनैः "शब्दार्थौ काव्य"मिति उक्तत्वात्, रोदसीशब्दग्रहणेन यथा भूम्याकाशयोर्द्वयोरपि एकवारमेव ग्रहणं भवति । तथैव काव्यशब्दग्रहणेन सकृदेव शब्दार्थयोः ग्रहणं भवति ।

तथा चेत –

"काव्यं मया पठ्यते, अर्थो नावगम्यते" इत्युच्यते केनापीति मन्यताम् । अस्मिन् वाक्ये "काव्यं पठ्यते" इत्यत्र, काव्यस्य शब्दार्थमयत्वात्, एषः संशयः जायते यत् – "अर्थः कथम् वा पठ्यते ? " तत्तु केवलमवगमनार्हः एव किल । अतः "काव्यं पठ्यते इत्येतदशुद्धम् । "अर्थो नावगम्यते" इत्मत्रापि शब्दार्थ-रूपकाव्यपठनेन, "अर्थो नावगम्यते" इत्युच्यते चेत् असम्भवमेव स्यादिति नात्र संशयः । एवं "काव्यं पठ्यते, अर्थो नावगम्यते" इति प्रयोगः अशुद्धः इति स्पष्टम् । किं स अशुद्ध एव ?

अन्यच्च —

"काव्यादर्थोवगम्यते" इति प्रयोगः कश्चिदस्तीति मन्यताम् । काव्यस्य शब्दार्थमयत्वात्, वाक्यस्यास्य "अर्थादर्थोऽवगम्यते" इत्यपि स्यादर्थः । कथम् वैतत् सङ्गतम् ? तथा चैषोऽपि प्रयोगः सदोषः । एवं अशुद्धेषु संवृत्तेषु ईदृक्षु प्रयोगेषु, "व्यवहारविदे" इति काव्ये कथमन्वर्थं स्यात् ? एवं लौकिकप्रयोगान् अशुद्धान् कृत्वा, अर्थात् तिरस्कृत्य राजमानं काव्यं कथम् स्यात् ? तत् काव्यं न स्याच्चेत् कथम् तस्य तादृशी प्रशस्तिः ? इत्थं विकलीभूते मनसि संशयबाहुल्येन दण्डी उक्तवान् –

"शरीरं तावदिष्टार्थव्यवच्छिन्ना पदावली" । अर्थात् काव्यं नाम पदावली एव । नार्थः कदापि । सैव पदावली इष्टार्थव्यवछिन्ना स्यात् । तदेव सौक्ष्म्येण विधिना प्रतिपादितं रसगङ्गाधरे – "रमणीयार्थप्रतिपादकः शब्दः काव्यम्" इति ।

"शब्दार्थौ काव्य" मिति, "अर्थविशिष्टा पदावली काव्य"मिति एते वाक्ये लोके यद्यपि समानार्थे इव व्यवह्रियेते प्रयुज्येते च तथापि शास्त्रीयदृष्ट्या तयोः भेदोऽस्त्येव। "शब्दार्थौ काव्य" मिति चेत्, काव्यपठनेन शब्दार्थौ द्वावपि सकृदेव बुद्धिगोचरौ स्याताम्। "अर्थप्रतिपादकः शब्दः काव्य" मिति चेत् काव्यपठनेन प्रथमतः शब्दः एव ज्ञायते नार्थः। पश्चात् तेन प्रतिपाद्योऽर्थः ज्ञातव्यः स्यात्। तथा च "काव्यं पठ्यते, अर्थो नावगम्यते" इति, "काव्यादर्थोऽवगम्यते" इति चैते वाक्ये अपि शुद्धे भवतः। पश्चात् सर्वं सङ्गतं भवति। शब्दार्थयोः अविनाभावसम्बन्धश्चाविच्छिन्न एव।

तस्मादिदानीमिदं निश्चीयते यत्काव्यं नाम पदावली एव। सा तु पदावल्यर्थविशिष्टा स्यात्। तदेव संग्रहेणोक्तम् "रमणीयार्थप्रतिपादकः शब्दः काव्य" मिति। तथा च श्लोको यदि लिख्यते तत्सर्वोऽपि रमणीयः स्यात्, न स्यादपि। तस्मिन् श्लोके यः शब्दः, यथा महाभवनस्य दीपः तद्भवनाय प्रकाशं ददाति, शोभामापादयति, तथा तस्य श्लोकस्य प्रकाशं, शोभां चापादयति स शब्द एव काव्यम्। "रामोऽस्मि सर्वं सहे" इत्यत्र केवलं "रामः" इति शब्दे एव सर्वोऽपि वाक्यार्थः केन्द्रीकृतोऽस्ति। अविद्यमाने तस्मिन् तन्निस्सारं शोभाविहीनं स्याद्वाक्यद्वयम्। अतोऽस्यां च पदावल्यां "रामः" इत्येष एव शब्दः काव्यशब्दवाच्यः। एवं च निश्चितम् यत् "रमणीयार्थप्रतिपादकः शब्दः काव्यम्" इति।

यद्यस्मिन् दोषाः स्युः तर्हि मर्षयन्तु तत्र भवन्तो विद्वांसः।

"गुणदोषौ बुधो गृह्णन् इन्दुक्ष्वेडाविवेश्वरः।
शिरसा श्लाघते पूर्वं परं कण्ठे नियच्छति॥"

# हिमवति दिव्यौषधयः शीर्षे सर्पः समाविष्टः

अस्माकं विचार आसीत् यद् परचक्रभये समुत्पन्ने मित्रराज्यानि रक्षेयुरस्मान् इति। अपि च क्लैब्यभावना काचिदासीत् तटस्थानां अस्मासु विषये को वा खड्गमुद्युञ्जीतेति। एतत् अभिप्रायद्वयमपि विपर्यस्तमासीत् अस्मद्विषये। कृशे कस्यास्ति सौहृदमितिरीत्या अस्मन्मित्रभूतः पञ्चशीलकपटकञ्चुकः चीन एव मित्रघ्नः अस्मद्भूमिमाचक्राम। अस्मत्सहोदरत्वेन परिगणितः पाकः अस्मद्भारतभागहारी काश्मीरार्धं कवलयित्वापि अतृप्तः उल्लङ्घते सीमानं क्षणे क्षणे, विभेदयति च काश्मीरनेतॄन् मतपिशाचिकावेशनेन। न केवलं तावत् भारतभूमिभागस्थान् मुसल्मानान् प्रलोभयति, पाकस्थानस्थान् हैन्दवान् प्रद्रावयति च। कांदीशीकानां सम्पत्तेः पाकिस्थानाधीनत्वात् निर्धनानां निरालम्बानां च तेषां आश्रयजीविकावृत्तिप्रभृतीनां प्रकल्पने भारतं बहुभारभृत् भवति। तत्रापि कान्दिशीकानां मध्ये केचन पाकचरा वर्तन्ते इति अतिशोचनीयोयं विषयः।

एवं अन्तर्बहिश्च व्याकुले भारते चीनाक्रमणं निरोद्धुमिच्छतामस्माकं आंग्लामेरिकाख्या देशाः स्वसाहाय्यार्पणप्रतिज्ञया आश्वासमदुः। यद्यपि सा च प्रतिज्ञा तैर्न सार्थकिता तथापि चीनः स्वपादं पश्चाच्चकार। परन्तु सः पाकस्थानद्वारेण अस्मान् पीडयितुमुद्युक्तः तं प्रोत्साहयति इदानीं। स चिन्तयति एवं कृते आत्मनः साधुत्वं प्रपञ्चे प्रपञ्चितं भवति, परस्पराभिहते पाकभारते शिथिलिते सुखप्राप्ये भविष्यतश्च इति।

अस्मद्दौर्भाग्यवशात् आत्मोपघातमचिन्तयन् पाकः इदानीं शिरसा गिरिमभिहनन् कुररः (मेषः) इव भारतं डीकरोति। एषः कच्छे जैत्रयात्रां प्रदर्श्य काश्मीरस्य अन्तः प्रविशति। कपटेन सन्धिं करोति, व्याजेन उल्लङ्घते। स्वयं सीमारेखां अत्येति आत्मनः परावर्तनाय अनुधावति भारते दोषं तं पातयति। पाकसैन्येन क्रियमाणं सीमोल्लंघनं साक्षात्कृतवन्तः अन्तर्जातीयसीमारक्षकाः ऐक्यराज्यसमितेर्यन्निवेदितवन्तः तद्विषमिव शिवः थांटः स्वकण्ठे स्तम्भितवान्। मन्ये सोचिन्तयत् पूर्ववद्भारतं यदि विज्ञापयेत् यद्यार्तनादं कुर्यात् तदा विचाराणां प्रारम्भेयेति। बहुवारविज्ञापनवैयर्थ्यनिरुत्सुकं भारतं इदानीं यशो वा मृत्युर्वा इति

आत्मपादयोरेव अवस्थातुं च निश्चित्य आत्मरक्षणपरवशः पाकान् परावर्त्य अनुधावति स्म शत्रुपृष्ठतः । एतत्कार्ये सीमोल्लंघनमवश्यं कर्तव्यमासीत् भारतेन । पाकाक्रान्तप्रदेशेषु युद्धावश्यकप्रदेशेषु आत्मस्कन्धावारं निवेश्यैव शत्रोः निरोधनं कर्तव्यमासीत् ।

तथा च कृते भारतेन शात्रवीयायुधानि बहूनि वशीकृतानि यानि अस्मन्मित्रेण अमेरिकया पाकाय दत्तानि भारतादन्यस्मिन् समाजवादिनि एव प्रयोक्तव्यानि न तु भारतोपरीति प्रतिश्राविताानि च ।

अन्ततो गत्वा पदातीनां रथिकानां वैमानिकानां च परस्परसंघर्षः प्रावर्धत पाकभारतयोः । अस्मत्सहायप्रतिज्ञातारः शृण्वन्ति वीक्षन्ते अभ्यूहन्ते च अस्माकं विपदं प्रतिपदम् । परन्तु स्वप्रतिज्ञातान्यायुधानि विमानानि धनानि जनांश्च नावतारयन्ति । इदं महदाश्चर्यं यद् स्वविरोधिचीनसम्बद्धं पाकं सहन्ते अनुमोदन्ते आवर्जयन्ति अपलपन्ति च तस्य दुष्कृत्याति । समाजवादनिरोधकानां चीनप्रतिभटानां यथोक्तकारिणामस्माकं विषये उपेक्षन्ते उद्विजन्ते तर्जयन्ति भर्जयन्ति अन्यथयन्ति स्ववचनानि इति । सत्यमिदं यत्कुररः विश्वसिति पशुघातिनमेवेति ।

अथेदानीं अस्माकं शिरसि आपत्समाविष्टा, आयुधादीनां कथा च परदेशेष्वेवावशिष्टा । परमुखप्रेक्षणेन कालयापनमनुचितम् । आत्मायत्तेन धनजनवस्तुवाहनसम्पदा अस्मदनुकूलविषया शत्रुनिरोधो वधो वा करणीयः । धनार्थे ऋणप्रकटनं दुर्व्ययकरणं च स्थगयितव्यम् । ग्रामपुनरुद्धरणप्रणालिका प्रथमतः नाशयितव्या यया सर्वकारस्य प्राण एव पीयते । तया यद् व्ययीक्रियते तल्लक्षांशमपि उद्दिष्टं प्रयोजनं साध्यते । अपि तु गणनामात्रचतुरैः प्रतारकैः अस्यते बृहती धनराशिः । अपि च वृद्धानां अनुदानं यद्दीयते तदनर्थकरं भारतकोशनाशकं अलसानां असत्यवादिनां च वर्धकम् इति तदपि स्थगयितव्यम् । आहारवस्तूत्पत्तिं वर्धयितुं योजना कार्या । खण्डान्तरप्रेषणीयानां वस्तूनां ह्रास आवश्यकः । देशीयेषु क्षुधाहतेषु नित्यावश्यकानां वस्तूनां च अर्घे अत्यधिके किं वा परद्रव्यसम्पादनेन वेतनादिपरिवृद्ध्या वा । वेतनेषु वर्धितेषु तदनुगुणं, कदाचित् तदननुगुणं वा मूल्यं च वर्धते । अतः वस्तुजातस्य मूल्यं स्थिरीकरणीयम् । तस्य एकैव गतिः आहारसस्यानां प्रोत्साहनं व्यापारसंस्थानां च निरुत्साहनम् ।

पञ्चवर्षप्रणालिकानां तात्कालिकनिरोधः, निर्वाचनानां विलम्बनं, प्रजाभिप्रायैकताभिवर्धनं, पञ्चायत्तादिपालकेषु दुश्चरितनिर्मूलनं, कठिनदण्डः, देशद्रोहिणां निर्वन्धः इत्यादिक्रियाः सुनिपुणमारब्धव्याः ।

भारत इदं विज्ञाप्यते पालकेषु – यच्च यावत् च अस्मदीयं युद्धोपयिकं वस्तु विद्यते तदेव संचेतव्यम् तेनैव सन्नाहः कार्यः । यदि इतरे दास्यन्ति तत्स्वीकर्तव्यमेव, अपि तु तस्मिन्नेव जयाशा न आरोपयितव्या । यद्यस्माकं नाशकरी स्यात् तटस्थता तत्परित्यज्यतां अवलम्ब्यतां च उचितः पक्षः । आत्मनाशकारिण्या तटस्थतया अलम् ।

जयतु भारतम् ! प्रबोधयतु देवः कर्तव्यं सांप्रतम् !

## संस्कृतं राष्ट्रभाषा, अन्याः प्रान्तीयाः

### पैंत्तबाडि महाकवि रामानुजाचार्यः

"वर्षे विरतेऽपि न विरताः शीकराः, इति न्यायतः अस्मद्देशमागतान् निरूढमूलानांग्लवृक्षान् अद्य समूलखातं उन्मूल्यापि प्ररूढशाखोपशाखाभवतद्भाषाबीजावापनतः वयं उद्यनवनानि विस्तारयामः ।

अस्यां भारतभूम्यां अस्मत्पूर्विककाले संस्कृतमेव राष्ट्रभाषा बभूव । तदा जनाः आबालगोपालं तद्भाषयैव भाषणान्यकुर्वन् ।

तदा भोजराजसदसि कश्चित् कुविन्दः —

"काव्यं करोमि यदि चारुतरं करोमि
यत्नात् करोमि यदि चारुतमं करोमि
भूपालमौळिमणिमण्डितपादपीठ
हे साहसांक कवयामि वमामि यामि ॥ इति

(8)

तत्सदसि कदाचित् जनैरानीतः कश्चित् चोरः — "कुटुम्बरक्षणाशक्तोऽहं भवत्सेवनार्थं चौर्यं कृतवान् । तन्नदण्ड्योऽहम् । यदि दण्डितः —

"भट्टिर्नष्टो भारवीयोऽपि नष्टः भिक्षुर्नष्टो भीमसेनोपि नष्टः ।
भुक्कुण्डोऽहं भूपतिस्त्वं हि राजन् भभावल्यामन्तकस्सन्निविष्टः ॥

इति च अवदत् । तत् श्रुत्वा राजा तुष्टः तयोः प्रत्येकं अक्षरलक्षं ददौ" इति चरिततोऽवगम्यते ।

पश्चात् यवनराज्यसंदर्भे "वेदपाठैकयोग्ये वयसि च यवनानीवाचनाभ्यासमेते" इति विश्वगुणादर्शोक्तिवत् आधुनिकांग्लवत् यवनभाषा प्रचुरा बभूव ।

आदौ महर्षिभिः व्याकरणं इति लक्षणग्रन्थनः विमर्शितं संस्कृतं प्राकृतं द्राविडं चेति भाषात्रयं, अन्याः भाषाः अव्याकृताः तथा स्कान्दे शंभुरहस्ये कुमारमहेश्वरसंवादे सप्तषष्टयुत्तरद्विशततमेऽध्याये —

"यथैव सांस्कृती भाषा प्रयुक्ता स्वर्गदायिनी ।
प्राकृती द्राविडी चापि तथैव स्वर्गदायिके ॥

पाणिन्याद्यैश्शिक्षितत्वात् सांस्कृती स्याद्यथोत्तमा ।
वाल्मीकिना शिक्षितत्वात् प्राकृत्यपि तथोत्तमा ॥

एवमेव विजानीहि द्राविडं चापिभाषितम् ।
अगस्त्यप्रार्थनातुष्टब्रह्मदत्तवरा इमाः ॥

नापभ्रंशत्वदोषोस्ति द्राविडीनां गिरां ततः ।
अतोऽन्याः खलु या भाषा आन्ध्रकर्णाटदेशजाः ।
तदनार्षादपभ्रंशा इति शास्त्रविदां मतम् ॥ इत्युक्तम् ।

अतः अखिलभारतराष्ट्रभाषात्वेन मातृभाषां सांस्कृतम् विरचय्य संस्कृतपदमिश्रितहिन्दीकर्णाटान्ध्रवंगमहाराष्ट्रादिभाषाः तत्तद्देशेषु प्रान्तीयभाषात्वेन तत्तद्देशस्थसर्वकलाशालासु पठनपाठनादिभिः व्यवहर्तुं तन्नियमितसर्वकाराधिकारिणः सर्वनियन्तारं श्रीगीताचार्यञ्च सप्रणामं प्रार्थयामः ॥

# संस्कृतप्रचारकम्

मासिकपत्रम्   वार्षिकम् ६ रू मात्रम्

प्राप्तिस्थानम् —

No. 2518 Bulbulikhana, Delhi—6.

एतत्पत्रं दशवर्षेभ्यः प्रचलति । सुलभशैल्या पुटस्य एकस्मिन् पार्श्वे संस्कृतं तत्पार्श्वत एव हिन्द्यां अनुवादश्च प्रकाश्यते । हिन्दी द्वारा संस्कृतमभ्यसितुं इच्छतां एतत्पत्रं महदुपकरोति । अपि च हिंदूसंस्कृतेः संरक्षणाय इदं बद्धादरं प्रतिभाति । अत्र प्रथमतः वेदमन्त्राणां द्वित्राणां समावेशः भवति, अनन्तरं नीतिकथाः संघटनानि, सुभाषितानि च सुललितानि निवेश्य यथातथं अनूद्यन्ते । मध्ये मध्ये प्रबन्धाः (व्यासाः) च निबध्यन्ते । सकलं आमूलाग्रं पठितुम् उत्साहो वर्धते । अन्ते च अस्य पत्रस्य "संस्कृतशिक्षकः" इति पाठ्यभागः क्रमाभ्यस्तः संस्कृतरचनाभाषणपटून् बटून् करिष्यतीत्यत्र नास्ति संदेशलेशः ।

# उद्यानपत्रिका (मासिकी)

एषा बहुकालप्रचुरप्रचारा मध्यकाले स्थगिता पुनः सम्मुद्र्यते इति महदानन्दस्थानम् ।

वार्षिकम् ३ मात्रम्

प्राप्तिस्थानम् —   सम्पादकः, प्रकाशकश्च

D. T. Tatacharya, Siromyni, M. O. L.

TIRUPATI.

# दया

न. च. वे. नरसिंहाचार्यः, B. A., B. O. L.,
तिरुपति.

दयायास्तत्वंत, यदुत—न बले सा हि सुलभा;
शनैर्वृष्टिर्वेयं निपतति दिवोऽधो महितले;
ददानस्याऽऽदातुर्वितरति च सा श्रेय उभयो-
रियं सत्वाढ्येषु प्रगुणमहिमोर्जस्विनितमा ॥

अलङ्कुर्याद्राज्ञां कनकमुकुटान्मस्तमधिकम्;
प्रभूणां दण्डोऽसौ पिशुनयति भौमं ननु बलम् ;
प्रभुत्वं माहात्म्यं वसत इह; तस्माच्च महिमा
भृशं बिभ्य; त्येषा त्वधिकमहिमा दण्डबलतः ॥

प्रभूणां प्रभ्वीयं हृदयमधिरूढेति, करुणा
गुणो दिव्य; स्तस्माल्ललितकरुणादृष्टिकलिता
प्रशस्तॄणां शिष्टिर्यदि भवति, भौमोऽपि महिमा
दधानो दिव्यत्वं बहुलमिह भव्यं प्रकुरुते ॥

---

Merchant of Venice ग्रन्थात्
The quality of mercy इत्यादितः
Seasors justice इत्यन्तस्य अनुवादः

केचनैव महानुभावाः स्वच्छन्दं स्वच्छन्दं प्रेषितवन्तः । तेषां शुभनामानि अधः दीयन्ते । अन्यानपि प्रार्थये स्वकं अवलम्बमपि प्रदातुम् । ति. कं. ति

## Names of Subscribers for Gairvani 1965

(Continuation)

| | | | |
|---|---|---|---|
| 98. | C. K. Ammani, Madras. | 4 | 00 |
| 99. | M. Sundararajan, Hyderabad. | 20 | 00 |
| 100. | Headmaster, Z. P. H. School, Pakala. | 4 | 00 |
| 101. | Venkatrama & Co, Chittoor. | 4 | 00 |
| 102. | S V. D. Oriental Secy. School, Dwarakatirumala | 4 | 00 |
| 103. | Principal, Hindu College, Guntur. | 4 | 00 |
| 104. | Sanskrit College, Vidyaparishat, Gunturu. | 4 | 00 |
| 105. | M. G High School; Gunturu. | 4 | 00 |
| 106. | Dr. E Venkata Subba Rao, Gunturu. | 4 | 00 |
| 107. | A. C Narayanacharya, Srikakulam. | 5 | 00 |
| 108. | S. Raghavan, Madurai. | 4 | 00 |
| 109. | K. Muni Reddy, Chittoor. | 4 | 00 |
| 110. | P. V. Ramana, Vizianagaram. | 4 | 00 |
| 111. | Mallela Kutumba Rao, Bheemavaram. | 4 | 00 |
| 112. | M. R. Multipurpose School, Vijayanagaram. | 4 | 00 |
| 113. | Maharshi Dayananda College, Bombay - 12. | 4 | 00 |
| 114. | G. Narayana Sarma, Cuddapah. | 8 | 00 |
| 115. | K. Narasimhacharyulu, Munugode. | 4 | 00 |
| 116. | Surendra, Guntur. | 4 | 00 |
| 117. | Brahmachari Surendranath, Varanasi. | 4 | 00 |
| 118. | Karnataka University Library, Dharwar. | 4 | 00 |

——:o:——

R. N. 8145/60. Postal R. No. H. 493.

वार्षिकम् रु. ४ - ००

# प्रहेलिकाः

सङ्कलयिता — **माचिराजु शिवरामराजः**

विराटनगरे रम्ये कीचकादुपकीचकम् ।
अत्र क्रियापदं वक्ते हैमं दास्यामि कङ्कणम् ।।

( विः = पक्षी, नगरे, आट = चचार इत्यर्थः )

अम्लानपङ्कजा माला कण्ठे रामस्य सीतया ।
बुधा मुधा भ्रमन्त्यत्र प्रत्युक्षेऽपि क्रियापदे ।।

( अत्र चतुर्थपादे स्थितः "प्रत्यक्षेपि" (क्षिप्तः) इति शब्दः क्रियावाची )

राघवस्य शरैर्घोरैः घोररावणमाहवे ।
अत्र क्रियापदं वक्त्रे हैमं दास्यामि कङ्कणम् ।।

( राघव ! घोरैः शरैः रावणं स्य = मारय इति अर्थः । "स्य" इति क्रिया )

पयस्विनीनां धेनूनां ब्राह्मणः प्राप्य विंशतिम् ।
ताभ्योऽष्टादश विक्रीय गृहीत्वैकां गृहं गतः ।। (कथमेतम् ? )

( धेनुना उनां न्यूनां विंशतिं अर्थात् एकोनविंशतिं धेनुः प्राप्य, अष्टादश विक्रीतवान् इति । )

Published by Sri N Ramanatha Iyer, B. A., B. L, Advocate & Secretary, S. B. P. Sabha, Chittoor (A. P.)
Printed by Sri T. K. Thiruvengadacharya, at Vijaya Press, Chittoor (A. P.) C. 1000